वचनता, क्रियाक्षेपेण च कर्त्रादीनां प्रतीतिः। तथेहापि क्रिया प्रयत्नमाक्षिपति, मा भूत्तस्य लिङ्वाच्यता इति। तदसत्। यद्यपि प्रकृत्यर्थभूतया क्रियया प्रयत्न आक्षिप्यते। तथाऽपि तदायत्तसिद्धिकतया कथमपूर्वं गम्यते। प्रत्नाभिधाने तदवच्छिन्नतया प्रतीयमानं तदायत्तसिद्धिकं गम्यते, नान्यथा। न च कृत्यनवच्छिन्नस्वरूपमात्रेणापूर्वमभिहितं कृतिमाक्षेप्तुमलम्। अवगतसम्बन्धं हि वस्त्वाक्षिप्यते। न च शब्दमन्तरेणापूर्वस्य प्रयत्नसम्बन्धावगमे कारणमस्ति। अतः कथं तत्प्रयत्नमाक्षिपेत्। तस्मादपूर्वकार्याभिधायिनां प्रयत्नाभिधानमवश्यमाश्रयणीयमिति, विषयकरणीये निपुणतरमुपपादितमित्यलमतिप्रसङ्गेन ॥४॥

तत्र न क्रियामात्रंतावदहं बुद्ध्वा प्रवृत्तः, नापि फलमात्रम्, न क्रियाफल-सम्बन्धमात्रं वा। क्रियाफलयोः साध्यसाधनतावगमेऽपि न प्रवृत्तिरुपपद्यते। तृप्तिहेतौ भोजनेऽतीते वर्त्तमाने वाऽप्रवृत्तेः, भविष्यत्यपि तत्साधने सामुद्रविदाख्यात इवाऽनुष्ठानाभावात्। पुरुषाशयावगमस्तु प्रवृत्तिहेतुत्वेनाऽऽशङ्कितोऽपि, स्वतन्त्रप्रवृत्तौ व्युत्पित्सोर्दूरोत्सारितत्वात्। किन्तु कार्यतां बुद्ध्वा प्रवृत्तोऽहम् ममेदं कार्यमिति प्रतीत्य अहं सर्वत्र प्रवृत्तः। तथाहि—

**आस्तां तावत्क्रिया लोके गमनागमनादिका।**
**अन्ततः स्तन्यपानादिः तृप्तिकारिण्यपि क्रिया ॥५॥**
**सा यावन्मम कार्येयमिति नैवावधार्यते।**
**तावत्कदापि मे तत्र प्रवृत्तिरभवन्नहि ॥६॥**

अत्रापर आह—सत्यं कार्यवगमादेव प्रवृत्तिः। इष्टसाधनतैव तु कार्यता, न परा काचित्, सैव प्रवृत्तिहेतु विधिरुच्यते। तदाह—

'अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः।
अतो ह्यध्यवसायादिर्नकिस्मान्नाभिधानतः'॥ इति।

तथा— (१. ब्रह्मसिद्धिः ३. १०३½—१०४½ पृ० ११५)

'पुंसो नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्त्तनाम्'। इति।



"कर्तुरिष्टाभ्युपाये हि कर्त्तव्यमिति लोकधीः।
विपरीते त्वकर्त्तव्यमिति तद्विषये ततः॥"

(१. विधिविवेक का. २६ पृ० २४३
२. विधिविवेक ३० पृ० ३०२)

तत्र तावदिदमेव वक्तव्यम्—अतीतस्य वर्त्तमानस्य चेष्टसाधनताऽस्ति, न च तत्कार्यतावसीयते। तेनान्या कार्यता, अन्य चेष्टसाधनता इति। तथा प्रवृत्तिरपि तन्मात्रावगमायत्ता न भवतीत्युपेक्ष्यैव तावत् फलसाधनताकार्यतयोः भेदं विनिर्दिशति—

**फलसाधनता नाम या सा नैव च कार्यता।**
**कार्यता कृतिसाध्यत्वं फलसाधनता पुनः ॥७॥**
**करणत्वं फलोत्पादे भिद्येते ते परस्परम्।**

यद्यप्येकवस्तुनिवेशिता द्वयोः तथापि स्वरूपभेदोऽस्त्येव। तदेव हि वस्तुफलं प्रत्युपायभावात्फलसाधनमित्युच्यते, कृत्यधीनात्मलाभतया च कार्यमिति॥ ७½ ॥

किमितीस्टाभ्युपायेष्वेव कर्तव्यतावगमः, अन्यत्र नेत्याह—

**किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत् ॥८॥**
**फलसाधना तत्र कारणं तेन कार्यता।**
**तद्भावभाविनी नित्यं तदा सैव प्रकाशते ॥९॥**

स्वभावेन हि कर्माणि दुःखोत्पाद्यहेतुभूतानि। तेषु कार्यत्वाववगमः फलसाधनतावगमनिबन्धनः। कार्यता हि न कृत्यधीनसिद्धितामात्ररूपा, किन्तु कृतिं प्रति प्रधानभूतं सत् यत् तदधीनसत्ताकम्, तत्कार्यमुच्यते। तच्च कृतेः प्रधानम्, यदधिकृत्य कृतिः प्रवर्त्तते। न च दुःखं दुखहेतुर्वाऽधिकृत्य कृतेः प्रवृत्तिरुत्पन्ना, नाप्यदुःखम्, अदुःखहेतुं वा। किन्तु सुखं सुखहेतुं वा। तत्र न तावत्स्वयं सुखरूपं कर्म, सुखसाधनमपि चेन्न स्यात्, न तस्य कृतिं प्रति प्राधान्यावगमो घटते। अतः कर्मसु कार्यत्वावगमः

फलसाधनतावगमनिबन्धन इति. ज्ञापककोटिनिविष्टा फलसाधनता कार्यतामनुरुध्यते, नत्वसौ तदात्मैव। तथा चासाधनस्यापि सुखस्यैवास्ति कार्यता। सुखं हि सर्वः कार्यतयाऽवैति, न तस्य फलसाधनतामपेक्षते। तेन फलसाधनतोत्तीर्णकार्यतावगमेन मे प्रवृत्तिरिति निश्चित्य व्युत्पित्समानश्चैत्रं प्रवर्तमानं दृष्ट्वाऽनुमिनोति 'चैत्रोऽपि कार्यबोधात्प्रवर्तत' इति। 'चैत्रस्य प्रवृत्तिः धर्मिणी कार्यबोधपूर्विका' इति साध्यो धर्मः, बुद्धिपूर्वकत्वे सति प्रवृत्तित्वान्मदीयप्रवृत्तिवदिति । लिङादयश्च प्रवृत्तिहेतुभूतार्थाभिधायिनः कार्यमेवाऽभिदधते। तस्यैवावगतस्य प्रवृत्त्यनन्तरकारणत्वात् ॥९॥

इच्छा यद्यपि प्रवृत्तिहेतुः, तथापि सा लिङादिवाच्या न भवति, तदवगमस्य प्रवृत्तावनपेक्षितत्वात्। उत्पन्ना हि सा प्रवृत्तिकारणम्, नावगता।

नन्वेवमपि कथं लिङादीनां कार्ये व्युत्पत्तिरित्यत्राह—

**शब्दान्तराणि स्वार्थेषु व्युत्पद्यन्ते यथैव हि।**
**आवापोद्वापभेदेन तथा कार्ये लिङादयः ॥१०॥**

लिङादियुक्तवाक्यश्रवणे तद्भावभाविन्या प्रवृत्त्या विशिष्टकार्यावगतिमनुमाय वाक्यस्य हेतुतामध्यवस्यति। तत्रापि कोऽर्थः केन शब्देनाऽभिहित इति विवेचने लिङाद्यावापे कार्यावगतिदर्शनात्, तदुद्धारे चादर्शनात्, त एव कार्यावगतिं कुर्वन्तीति शब्दान्तरवल्लिङादीनां कार्यवाचकत्वव्युत्पत्तिसिद्धिः ॥ १० ॥

ननु लोकव्यवहारात् लिङादयो वाचकतया व्युत्पाद्यमाना प्रैषादिष्वेव वाचकतया व्युत्पत्तिमर्हन्ति। तत्रैव तेषां प्रयोगदर्शनादित्याशङ्क्याह—

**कार्यमेव हि सर्वत्र प्रवृत्तावेककारणम् ।**
**प्रवृत्त्यव्यभिचारित्वाल्लिङाद्यर्थोऽवधार्यते ॥१२॥**

प्रवृत्तिर्हि बालेन स्वात्मनि कार्यावगमपूर्विका प्रतिपन्नेति, सर्वपुरुषानपि प्रवर्तमानान्दृष्ट्वा कार्यावगममेव बालः कल्पयति इति प्रैषादीनामपि प्रवृत्तिः कार्यावगमनिबन्धनेति कार्यमेव प्रैषादिव्यपदेशयोगीति सिद्धम्।



वस्तुतस्तु प्रैषादीनामपि प्रवृत्त्यव्यभिचारित्वात्कार्यस्य च प्रवृत्तिषु सर्वासु हेतुभूतत्वात्प्रैषादिष्वपि लिङादीनां कार्यमेवार्थ इति निश्चीयते ॥ १२ ॥

केन पुनः प्रमाणेन बालः स्वयं कार्यमवगच्छति । यतः प्रवर्तत इत्यत्राह—

**कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते ।**
**तच्च मानान्तरेणापि वेद्यमोदनपाकवत् ॥१३॥**

कृतौ सत्यां भावात्, असत्यां चाऽभावादनुमानतः कृतिसाध्यता तावदवगम्यते। यदधिकृत्य कृतिः प्रवर्तते, तत्कृतेः प्रधानम्, प्रयत्नश्च कृतिः । स च मानसप्रत्यक्षवेद्य इति विशिष्टप्रयोजनतापि प्रयत्नस्य प्रत्यक्षवेद्यैव। तेन प्रत्यक्षानुमानाभ्यां कार्यमवगम्यते। यथा चोदनपाकयोरिति न किञ्चिदनुपन्नम्।

उपसंहरति—

**एवं कार्यात्मकेऽप्यर्थे व्युत्पद्यन्ते लिङादयः।**
**तदन्वितेषु स्वार्थेषु तथा शब्दान्तराण्यपि ॥ १४ ॥**

एवमपि कथं मानान्तरावेद्यकार्यवाचिता लिङादीनामित्याशंक्य मीमांसामवतारयति—

**सम्प्रधार्यमिदन्त्वत्र तत्कार्यं किं क्रियात्मकम्।**
**यद् वा तद् व्यतिरेकीति**

को नु निर्णय इत्यत्राह—

**तत्र लोकानुसारतः॥ १५ ॥**
**प्रमाणान्तरविज्ञेया क्रिया कार्येति यद्यपि।**

लोके हि लिङादियुक्तवाक्यश्रवणे विशिष्टक्रियानुष्ठानदर्शनात्तद्विषया कार्यावगतिर्लिङादिभिः क्रियते इति यत्तम्, अवगतिप्रवृत्त्योरेक-

विषयत्वात् । नह्यन्यत्कार्यतयाऽवगम्याऽन्यत्र बालः प्रवर्त्तते । किञ्च क्रियायां कार्यभूतायां लिङादियुक्तवाक्यप्रतिपाद्यायामभ्युपगम्यमानायां शक्तिकल्पनालाघवं स्यादेव । तथा हि धातुरेव कार्यभूतं स्वार्थं ब्रवीतु, तथाभूतार्थवाचिनस्तु धातोः परे लिङादयो भवन्तीत्याश्रीयते । लिङादि-श्रवणे तु तथाभूतार्थपरतया धातुः प्रयुक्त इत्यवगम्य कार्यभूतधात्वर्थावगमः सम्पद्यते । यथा लडादिभ्यो वर्त्तमानाद्यध्यवसायः, तेष्वपि वर्त्तमानेऽर्थे वर्त्तमानाद्धातोर्लडित्येवसूत्रार्थः । कर्त्रादिसंख्यामात्रवाचित्वमेव केवलं लडादीनामिव लिङादीनामप्यर्थ इति, क्रियैव कार्यतया वेदेऽप्यवगम्यते इति, यद्यपि विवेकसमर्थानाम वगतिर्भवति ।

**तथापि वेदे षष्ठाद्यसिद्धान्तेऽवस्थिते सति ॥ १६ ॥**
**स्वर्गकामादयः कार्ये नियोज्यत्वेन सम्मताः ।**
**स्वर्गकामादिभिश्शब्दैर्वक्तव्या इत्यवस्थितम् ॥ १७ ॥**

षष्ठाद्ये ह्येतदुक्तम् - लिङादिप्रयोगे तावत्कार्यावगतिरस्तीति निर्विवादम् । कृतिसाध्यञ्च कार्यं भवति । सति कर्त्तरि तस्यात्मलाभः । कर्त्तृलाभश्च स्वसम्बन्धिकार्यावबोधे सति भवति, नान्यथा । तेन यद्यपि लोकानुसारेण क्रियाया एव कार्यतया बोध्यमानाया वाक्यार्थत्वात्, तदन्व-यित्वाच्चेतरेषामपि पदार्थानां कारकत्वादृते चान्यस्य क्रियान्वयित्वा-सम्भावल्लोहितोष्णीषन्यायेन विशेषणभूतस्वर्गकामनासमर्पणपरतया कर्त्र-विशेषणत्वेन स्वर्गकामस्यान्वयोऽवगम्यते । तथापि स्वसम्बन्धिकार्यबोद्धृ-त्वेनैवान्वयो वर्णनीय इति नियोज्यसमर्पकत्वमेवाऽऽश्रीयते इति ॥१७॥

एवमपि किमित्याह—

**नियोज्यः स च कार्ये यः स्वकीयत्वेन बुद्ध्यते ।**

तथापि किमित्याह –

**स्वर्गादिः कामयोगाच्च साध्यत्वेनैव गम्यते ॥१८॥**

साध्यविषयस्यैव हि सर्वत्र कामना भवति, तेन तत्सम्बन्धात्साध्य-भूतं स्वर्गादि काम्यमानयता पुरुषं विशिनष्टि—

**तेन साध्यत्वपर्यन्तस्वर्गादीच्छाविशेषितः ।**
**तदेव शक्नुयात्कार्यं बोद्धुं यत्काम्यसाधनम् ॥१९॥**



अत्र कश्चिदाह—यद्यपि मनोकामनायोगात्साध्यता स्वर्गादीनाम-वगम्यते तथापि प्रकृतकार्यसाध्यत्वावगमो निष्प्रमाणक एव अन्यसाध्य-स्यापि साध्यत्वसम्भवात् । न च यत्काम्यते तस्यावश्यं साधनमस्ति । मनोरथपरम्पराहृतचेतसो हि तन्नास्ति यन्न कामनाविषयी भवति । न च तस्य सर्वस्य साधनं भवति, सर्वज्ञत्वमपि केचित् कामयन्ते, न च तस्योपाय-सम्भवः । अथ तदिच्छावतोऽतत्साधने कर्त्तृता नोपपद्यते । कथं नोपपद्यते । दृश्यन्ते हि ग्रामाभिगमनकामा अपि यादृच्छिकीषु क्रियासु प्रवर्त्तमानाः । अपि च सर्वोऽभ्युदयार्थ्येव पुरुषः, तथापि प्रायशस्तद्विरोधिष्वेवेन्द्रियार्थेषु प्रवर्त्तमानो दृश्यते ।

अत्रोच्यते—स्वर्गादिकं कामयमानस्य तदेव कार्यतया बोद्धुमव-कल्प्यते, यदेव तस्य काम्यमानस्य सिद्ध्यनुगुणम् । अन्यथा हि तत्कामिना सता तत्कार्यतयाऽनवबुद्धं स्यात् । अपरित्यक्ततत्कामना सम्बन्धो हि तत्साधनं कार्यतयाऽवबुद्ध्यते । तस्माद्यत्कामिनो यत्कार्यतयोपदिश्यते तत्तस्य काम्यस्य साधनमिति नियोज्यकार्यान्वयानुपपत्त्यैव गम्यते ॥१९॥

एवं सति किं फलमित्याह—

**लिङादिस्तत्र कार्यञ्चेत् क्रियामेवाऽवबोधयेत् ।**
**समन्वयो नियोज्येन तदानीमेव हीयते ॥२०॥**

कथमित्याह—

**क्रिया हि क्षणिकत्वेन न कालान्तरभाविनः ।**
**स्वर्गादेः काम्यमानस्य समर्थाः जननं प्रति ॥२१॥**
**इष्टस्याऽजनिका सा च नियोज्येन फलार्थिना ।**
**कार्यत्वेन न सम्बन्धमर्हति क्षणभङ्गिनी ॥२२॥**

कार्यविरोधि कर्मेति प्रमाणान्तरसिद्धम् । परिस्पन्दो ह्युत्तरदेश-संयोगोदयापवर्गीत्याशुतरविनाशी, स्वर्गश्च नियतदेशान्तरकालान्तरभोग्यः ।

ननु प्रीतिमात्रवचनः स्वर्गः इति षष्ठाद्ये साधितम्, प्रीतिसाधनेषु द्रव्येषु स्वर्गशब्दप्रयोगात् । नच तेषु स्वरूपनिबन्धन एव तत्प्रयोगः,

प्रीत्युपगमे तदभावात्। न च तत्साधनवचनता तदनभिधाने घटते, तदभिधानाभ्युपगमे तद्वाचकतैव। लक्षणया तत्साधने प्रयोगोपपत्तेः, तत्र शक्तिकल्पना परिक्षयात्। अखण्डशब्दतया च दण्डिन्यायस्यासम्भवात्तदन्तर्गतस्य दण्डशब्दस्य दण्डप्रत्यायकत्वसम्भवात्। प्रीतेश्च कर्मान्तरभावित्वमपि न सम्भवत्येव।

उच्यते—न प्रीतिमात्रवचनतया ज्योष्टोमादिचोदनासु स्वर्गशब्दस्य प्रयोगोऽवकल्पते, अर्थवादेषु दुःखासम्भिन्नचिरतरोपभोग्याभिलाषोपनेयप्रीतिश्रवणात्। तत्र यदि विध्युद्देशगतः स्वर्गशब्दः तथाविधप्रीतिपरतया न वर्ण्यते, तदाऽतिपरोक्षार्थवादपदानां वृत्तिरादृता न भवेदिति, तदानुगुण्येन तादृश्यामेव प्रीतौ स्वर्गशब्दः प्रयुक्त इति निश्चीयते। तथाभूता च सा नियतमेव देशान्तरभोग्या। अतो न कर्मानन्तरभाविनीति, न तत्र कर्मण आशुतरविनाशिनः साधनताऽवकल्पते। यस्मिन् हि पूर्ववर्त्तिनि यन्निष्पाद्यते तत्तस्य साधनमिति लोकप्रतीतिः। अत एव च विनष्टस्यापि कर्मणः शास्त्रेण साधनत्वं बोध्यते इति ये ब्रुवते तेऽपि निरस्ताः। एवं चाशुतरविनाशिनी क्रिया स्वर्गकामिना नियोज्येन सह कार्यतया सम्बन्धुं नार्हति, स्वर्गं प्रति साधनत्वानुपपत्तेः ॥२०-२२॥

**तस्मान्नियोज्यसम्बन्धसमर्थं विधिवाचिभिः।**
**कार्यं कालान्तरस्थायि क्रियातो भिन्नमुच्यते ॥२३॥**

ननु क्रियैव कार्यतयोच्यताम्, अस्तु सैव फलसाधनम्। तेन तस्या अपिनियोज्यसम्बन्धो घटत एव। न त्वसौ क्षणभङ्गिनी देहान्तरोपभोग्यस्वर्गसाधनतां कथमवलम्बिष्यते। उच्यते-वरं तस्या एव तदनुपपत्त्या चिरतरावस्थायिताकल्पना, न पुनरदृष्टस्याश्रुतस्य तदतिरेकिणोऽर्थस्य कल्पना।

यदि वा कर्मण एव शक्तिरवस्थायिनीत्यभ्युपगम्यताम्, तदिदमुभयमपि प्रमाणान्तरविरोधान्न कल्पनामर्हति। अविरोधि हि प्रतीतिसिद्धच्यर्थं कल्पयितुं शक्यम्। कर्मणश्चाऽऽशुतरविनाशिनश्चिरतरावस्थायिता प्रमाणान्तरविरुद्धा।



शक्तिमति चातीते शक्तिरप्यतीतेति प्रमाणान्तरसिद्धमिति, न सापि स्थायिनी शक्या कल्पयितुम्। अपि चाश्रये निवृत्ते किमाश्रया शक्तिरवतिष्ठताम्। आत्माश्रितेति चेत् नान्यदीया शक्तिरन्यत्र वर्त्तते, प्रमाणान्तरविरोधादेव। किञ्च शक्तिमत्यसति, शक्तेः फलं न युक्तम्। शक्तिमद्धि साधनम्, न शक्तिः केवला, अन्यथा शक्तित्वं न स्यात्।

ननु यागादिक्रिया देवताऽऽराधनोपायभूता सती कार्यतयोच्यताम्। सा तत्प्रत्यासत्तिद्वारेण कालान्तरेऽपि फलं जनयितुमलमेव। देवताफलदानसमर्था कर्मभिराराध्यते, साऽऽराधिता प्रसीदति, प्रसन्ना च कर्तॄन्कालान्तरेऽपि फलेन योजयत्येव इति।

नतदेवम्। यागादीनां देवताराधनहेतुत्वे प्रमाणाभावात्। नहि देवताराधनोपायभूतो याग इत्यत्र किञ्चित्प्रमाणमस्ति। ननु देवपूजार्थः एव यजिः स्मर्यते। पूजा च सर्वा पूज्यमानाराधनार्थेत्यवगतम्। उच्यते-न स्मृतिः प्रमाणं स्मृतित्वादेव। प्रमाणान्तरापेक्षया च स्मृतीनामर्थवर्णनम्, तदनुवर्त्तित्वात्तासाम्। न च प्रमाणान्तरेण देवताराधनोपायता यागस्यावगम्यत इत्युक्तम्। अतो देवतोद्देशेन द्रव्यत्यागो याग इति गौणं देवतापूजात्मकत्वमवगन्तव्यम्। पूजापि पूज्योद्देशेनैव हि प्रवर्त्तते इति। अपि च सा कर्मभिराराध्यते, याऽऽराधनं प्रतिपद्यते। नाना देशगामिना पुरुषेणानुष्ठीयमानयागात्मकपूजावगमश्च देवताया इति प्रमाणविरुद्धमेव, विग्रहवत्तश्च प्रतिपत्तियोगिता, तस्य च वेदेनानादिनाऽऽराध्यतया प्रतिपादनमपि प्रमाणान्तरविरुद्धमेव, तस्यानादित्वानुपपत्तेः। देवताधिकरणे च प्रपञ्चेनायमर्थो निरस्त इति नातीवात्र यतितव्यम्।

अथापि स्यात्पुरुषसंस्कारहेतुभूतैव क्रियाशब्देन कार्यतयोच्यते, तस्याश्च स्वर्गकामादिपुरुषसम्बन्धात्पुरुषसंस्कारादेव कालान्तरे फलं भविष्यति इति। तन्न पुरुषसंस्कारत्वे प्रमाणाभावात्। न हि प्रमाणान्तरतः शब्दतो वा पुरुषसंस्कारहेतुता यागादीनामवसीयते इति 'कर्मण्यारम्भभाव्यत्वादि त्यत्रोक्तम्।

ननु क्रियैव कार्यतयोच्यताम्, फलसाधनता च तस्या एवाऽऽश्रीयताम्। तदन्यथानुपपत्त्या तु किञ्चिदप्यपरं तज्जन्यं फलोदयानुगुणं

कालान्तरस्थाय्यात्माश्रयं परिकल्प्यताम्, माभूत्तस्य लिङादिवाच्यता इति।

उच्यते-तद्धि तदनुपपत्त्या कल्प्यते, यद्यस्योपपादकम्। न च क्रिया-जन्येनान्येन फलजनकेन कल्पितेन क्रियायाः फलसाधनतोपपादिता भवति। न हि साधनसाधनं तस्य साधनं भवति, अवान्तरव्यापारो वा शक्तिर्वा तत्साधनतां निर्वाहयति। व्यापारयोगितयैव शक्तिमतां साधनता यतः। न चात्मसमवाय्यर्थान्तरं कर्मणामवान्तरव्यापारः, नापि शक्तिरिति, न तस्यार्थापत्तिगम्यता युक्ता। किन्त्वन्विताभिधाने स्थिते नियोज्यानुगुण्या-च्छब्दवाच्यतैवोचितेति सूक्तम् 'नियोज्यसम्बन्धसमर्थं कालान्तरस्थायि कार्यं क्रियातिरिक्तं लिङादिभिरेवोच्यते" इति।

गुरुमतसर्वस्वम्—

अत्रैषा प्रक्रिया। चोदनासूत्रे कार्यार्थता प्रतिपादिता। षष्ठाद्ये कार्यस्य स्वसम्बन्धितया बोध्यः स्वर्गकामादिर्नियोज्य इति व्युत्पादितम्। स्वर्गकामना च नियोज्यविशेषणमित्येकादशाद्ये व्युत्पादितम् तस्य कार्यस्य नियोज्यविशेषणीभूत-काम्योत्पत्तिहेतुत्वमिति बादर्यधिकरणे राद्धान्तितम्। तच्च तथा भूतं कार्यं क्रियारूपं न भवति तस्या फलसाधनत्वायोगात्। देवताराधनमुखेन तावत् फलसाधनता नास्तीति 'कर्मण्यारम्भभाव्यत्वादि त्यत्रोक्तम्। कर्मणः तच्छक्तेर्वा स्थायिता नेति चापूर्वाधिकरणे प्रतिपा-दितम्। अतो नियोज्यान्वय मुखेन मानान्तरापूर्वमात्मसमवायिकार्यं लिङादिभिरभिधीयत इत्यनेकन्यायसाध्यम् कार्यञ्च कृतिसाध्यम्। कृतिश्च पुंसां प्रयत्न एव। न चासौ भावार्थमन्तरेणास्तीति, तत्सम्बद्ध एवोच्यते इति भावार्थाधिकरणे स्थितम्। स च भावार्थः सम्बध्यमानस्तमवच्छिन-त्तीति शब्दान्तराधिकरणे निर्णीतम्। विषयभूतश्च भावार्थः करणीभव-तीति बादर्यधिकरणे एवोक्तम्। स्वकार्यसाधने भावार्थे पुरुषस्यैश्वर्यमिति च तत्रैवोक्तम् ॥२३॥

कालान्तरावस्थायिनः कार्यस्य नियोज्यान्वययोग्यतामाह—

**तद्धि कालान्तरस्थानाच्छक्तं स्वर्गादिसिद्धये।**
**सम्बन्धोऽप्युपपद्येत नियोज्येनास्य कामिना॥२४॥**



ननु भाष्यकारः प्रत्ययार्थमपूर्वं मित्याह, न क्रियादिभिन्नं कार्यमिति यो मन्यते, तं प्रत्याह—

**क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत्।**
**अतो मानान्तरापूर्वमपूर्वमिति गीयते ॥२५॥**

नन्वेवमपूर्वं वाक्यार्थः स्याद् न नियोगः। नियोगश्च वाक्यार्थ इति प्राभाकराणामुल्लाप इत्यत्राह—

**कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ।**
**नियोग इति मीमांसानिष्णातैरभिधीयते ॥२६॥**

एवमपि कथं तस्य वाक्यार्थत्वमित्याह—

**कार्यस्यैव प्रधानत्वाद्वाक्यार्थत्वञ्च युज्यते।**
**वाक्यं तदेव हि प्राह नियोज्यविषयान्वितम् ॥२७॥**

उक्तं ह्येतत्-यत् प्रधानतया प्रतिपाद्यते तद् वाक्यार्थः इति। कार्यञ्च प्रधानतयोच्यते इति तस्यैव वाक्यार्थत्वम्।

नियोज्यान्विताभिधानं च प्रायिकम्, आधानाध्ययनाङ्गप्रधानोत्पत्ति-नियोगानां नियोज्यशून्यानामभिधानाभ्युपगमात्। विवरणकारा ह्याधान-विषयमपि नियोगान्तरमिच्छन्ति, क्रतुनियोगप्रत्यभिज्ञानाभावात्। असन्निधाने हि तन्नियोगप्रत्यभिज्ञानं नोपपद्यते। नापि पर्णतादिवदव्य-भिचरितक्रतुसम्बन्धाग्निमुखेन प्रत्यभिज्ञोपपत्तिः। प्रागाधानादाहवनीया-दिशब्दानामर्थापरिज्ञानात्क्रतुसम्बन्धानवगमात्। जुह्वादीनान्त्वाकृतिवचन-त्वात्प्रागेव विधेर्नियोगप्रत्यभिज्ञासम्भवः।

नन्वग्नीनामपि साध्यत्वात्, साध्यद्वयं कथमेकस्मिन् वाक्येऽन्वीयते? उच्यते-नियोग एवात्रापि प्रधानं साध्यम्, अनीप्सितकर्मत्वादग्नीनाम्। अनीप्सितकर्मत्वेऽपि यत्तदाधानजन्यं फलमग्निसमवायि, तद्योगिन्याहवनी-यादिशब्दप्रयोगात्। आहवनीयादीनाञ्च क्रतूपयोगित्वात्तत्सिद्ध्यर्थतयैव पुरुषप्रवृत्त्युपपत्तेरनुष्ठानलाभादलं नियोज्यान्विताभिधानेनेति।

तथाध्ययनविधावप्याचार्यकरणविधिप्रयुक्त्यैवानुष्ठानलाभान्नियोज्य-शून्याभिधानमिति स्थितम्। प्रधानोत्पत्तिनियोगा अप्यधिकारनियोगाक्षिप्तस्त्रविषयानुष्ठानेनैव लब्धसिद्धय इति न तत्र नियोज्यान्विताभिधानान्वेषणम्।

अङ्गोत्पत्तिनियोगा अपि विनियुक्तप्रयाजादिविषयत्वादधिकारनियोगाङ्गतयैव सिद्धयन्तीति किं तेषु नियोज्यान्विताभिधानेन।

कथं तर्हि प्रयाजादिविधीनां विनियुक्त विषयत्वम्? उच्यते-साधिकारनियोगसन्निधौ प्रयाजादिवाक्यानि श्रुतानि न तावत्स्वविषयं नियोगान्तरमवगमयितुमीशते, अवघातादिवदनुवादकत्वसम्भवात्। किन्तु स्वरूपमात्रमेव योग्यस्वपदार्थविशिष्टमुपस्थापयन्ति। तच्च प्रयोजनाकांक्षितया प्रयोजनीभूतेन साधिकारेण नियोगेनान्वीयते इति, अधिकारवाक्यगत एव लिङ्शब्दः तदन्वितं स्वार्थमभिधत्ते। स चान्वयः प्रयाजादीनामैदमर्थ्यमात्रेण ग्राहकग्रहणमित्युच्ते। करणोपकारसाकांक्षस्य चापूर्वस्य यत्करणोपकारपरिकल्पनं स प्रकरणव्यापारः इति यत्तेषां करणोपकार जनकत्वकल्पनं तदौपादानिकम् इति।

नास्ति तर्हि प्रयाजादिषु नियोगान्तरम्? न नास्ति, क्षणिकानां तेषां सम्भूय करणोपकारकत्वानुपपत्तेर्नियोगान्तरस्याऽवश्याश्रयणीयत्वात्। योऽसौ लिङादिः प्रागनूद्यमानार्थकतया शंकितः स इदानीं नियोगान्तरमभिधत्ते। अत एव चावघातादिवत्तेषां 'यजि' आदि शब्दानामेवाङ्गवाक्यगतानामधिकारनियोगान्वितस्वार्थाभिधानं नाभ्युपगम्यते। तथा सत्युत्पत्तावेवाङ्गयाग स्वरूपस्यान्यतिरश्चीनस्य नियोगान्तराविषयत्वात्, नियोगान्तरविषयता न स्यात्। उत्पत्तिदशायां त्वनन्यतिरश्चीनतयाऽभिधानाद्युक्तं नियोगान्तरविषयत्वम्। कस्मात्पुनरन्यतिरश्चीनस्य नियोगान्तराविषयत्वम्, कार्यद्वयसम्बन्धावगमानुपपत्तेः नह्येकं वस्तु युगपत्कार्यद्वयसम्बन्धि शक्यमवगन्तुम्। यच्च नियोगान्तरं प्रयाजादिषु, तत्पश्चादभिधीयमानमधिकारनियोगाङ्गतयैव स्वशब्देनाभिधीयते। अन्यथा विषयद्वयविनियोगविरोधादित्यलमति प्रसङ्गेन ॥२७॥



ननु नियोगस्य फलसाधनत्वात्, तस्य च सेतिकर्त्तव्यताकरणनिबन्धनसिद्धित्वात्, तदनुष्ठानानन्तरं नियोगसिद्धेः फलस्यैव प्राधान्यात्, तस्यैव वाक्यार्थत्वं युक्तमित्यत आह—

**आत्मसिद्धयनुकूलस्य नियोज्यस्य प्रसिद्धये।**
**कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव न ॥२८॥**

यत्तपूर्वं कार्यम्, तस्य नियोज्यान्वयं विना कार्यत्वानुपपत्तेः, अनुष्ठानं विना तदसम्भवात् कर्त्रा च विना तदनुपपत्तेः, अधिकारेण च विना कर्त्तुरभावात्, नियोज्यत्वं विना तदयोगात् अकामसाधने च कामिनो नियोगानवगमादिति, आत्मसिद्धयर्थमेव नियोगः काम्यमानफलसिद्धिहेतुत्वमवलम्बते स्वामिवत्। यथाऽऽत्मन एव संविदधानः स्वामी गर्भदासस्योपकरोति, तथा नियोगोऽपि नियोज्यस्येति न प्राधान्यप्रच्युतिः ॥२८॥

ननु नियोगस्यफलसाधनत्वात्, तस्य च सेतिकर्त्तव्यताकरणनिबन्धनसिद्धित्वात्, तदनुष्ठानानन्तरं नियोगसिद्धेः फलसिद्धिः स्यात्, अनन्तरनियोगो न निष्पद्यते, तर्हि क्रियायामतीतायां कुतस्तत्सिद्धिरित्यत्राह—

**विषयानुष्ठितौ सत्यां सिद्धो न हि विधिः फलम्।**
**तदानीमेव कुरुते सहकारिव्यपेक्षया ॥२९॥**

एषात्र दर्शन स्थितिः—प्रधानोत्पत्तिनियोगाः अङ्गोत्पत्तिनियोगाश्च यथायथं सन्निपत्योपकारकाङ्गयुक्तस्वविषयमात्रानुष्ठानेनैव सिद्धयन्ति। तत्र यान्यङ्गानि पूर्वाणि तानि सम्भूय प्रधानोत्पत्त्यपूर्वमुपकुर्वन्ति, तस्माच्च परमापूर्वं निष्पद्यते। यान्यपि चाङ्गापूर्वाणि दीक्षणीयानीनां तेषामप्यारादुपकारकातिदेशिकाङ्गभाजामेकमुत्पत्त्यपूर्वम्, अपरमप्यङ्गापूर्वं प्रधानवद्वेदितव्यमिति। अनया दिशाऽन्यत्रापि सकलमूहनीयम्।

इत्थं यद्यपि कर्मानुष्ठानानन्तरमेव नियोगसिद्धिः, तथापि यत्फलस्यानन्तराभवनम्, तत् उपपत्त्या कल्प्यत इति।

नन्वेवं सति फलहेतुताऽपूर्वस्य बाध्येतेत्यत्राह—

**सहकारिव्यपेक्षा च कारणत्वं न बाध्यते ।**
**मा बाधिष्टेति सर्वत्र तदनुग्रहकल्पना ॥३०॥**

तथेत्यर्थः ।

'अतः पुरुषकारश्च दैवञ्च फलसाधनम्' इत्याचार्याः । दैवम्-अपूर्वम् । अपेक्षणीयं सहकारि च पुरुषकारपदवेद्यम् ।

नन्वेवं भवतु काम्येष्वपूर्वकार्याभिधानं लिङादीनाम्, नित्यनैमित्तिकनिषेधाधिकारेषु कथम् ? न हि तेषु फलोदयं प्राभाकरा अनुमन्यन्ते । नहि फलं फलतयाऽन्वीयते, किन्त्वधिकारिविशेषणतया । लब्धे तु जीवनादावधिकारिविशेषणे किं फलान्वेषणेन । न च फलमन्तरेण प्रवृत्त्यसम्भवः, स्व सम्बन्धिकार्यावगममात्रायत्तत्वात्प्रवृत्तेः । निरपेक्षाच्छब्दात्फलमन्तरेणापि स्वसम्बन्धिकार्यावगमः, तावन्मात्रस्य लोके प्रवृत्तिहेतुत्वागमात् । कार्यावगमोत्पादनायैव फलमुपयुज्यते इत्युक्तम् । ननु यथा शब्दात्कार्यावगतिः, तथा निष्फलत्वादनुमानेनाऽकार्यता प्रतीतिरपीति, कथं प्रवृत्त्युपपत्तिः ? न, आगमविरोधेनानुमानस्याऽऽत्मलाभाभावात् । एतावानेव प्रमाणव्यापारः, यत्प्रवृत्तियोग्यार्थोपदर्शनम् । अन्यथा यदि कश्चित्कल्पिते फले न प्रवर्त्तते तदा किं कर्त्तव्यम् ॥३०॥

ननु फलोदयानभ्युपगमे च प्राच्यमार्गासम्भवात्, नित्यादिष्वपूर्वकार्याभिधानमप्रमाणकं स्यात्, तत्राह—

**एवं कामाधिकाराऽर्थपर्यालोचयोत्थिता ।**
**व्युत्पत्तिः सर्ववाक्यार्थप्रतिपत्तिनिबन्धनम् ॥३१॥**

उक्तमिदमन्याप्यञ्चानेकार्थत्वम् इति । तेन कामाधिकारे सिद्धेऽपूर्वकार्याभिधायकत्वे, नित्यादिष्वपि स एवार्थो विरोधाभावादाश्रीयते । नित्याधिकाराद्यगुण्येन तु क्रियाकार्यत्वाभिमानं काम्येष्वनुपपन्नमिति, सर्वत्रापूर्वमेव वाक्यार्थ इति ॥३१॥

नन्वेवं वेदादेव व्युत्पत्तिरास्थिता स्यादित्याशंक्याह—

**व्युत्पत्तिरपि कार्येऽर्थे व्यवहारानुसारिणी ।**
**किन्तु निर्धारणामात्रं वेदवाक्यविमर्शजम् ॥३२॥**



तत्रैतदेव तावद् वक्तव्यम्-न केवलं वेदे लोकव्यवहारादेव शब्दार्थावधारणम्, किन्तु प्रसिद्धार्थपदसम्बन्धादपि पदार्थान्तरान्वययोग्यार्थाभिधायकतेति स्थिते, तदनुरूपार्थाभिधायकता निर्णीयत एव । एतच्च यववराहाधिकरणे व्युत्पादितम् । व्यवहारत एव सम्बन्धावधारणादुभयथाऽपि व्यवहारदर्शनात्समा प्रतिपत्तिरिति पूर्वपक्षः । पदान्तरसम्बन्धादपि पदान्तरार्थाध्यवसानं भवत्येव, तेन वैदिकवाक्यशेषान्वयार्हतालोचनेन दीर्घशूकाद्यर्थत्वमेवेति राद्धान्तः ।

तथा त्रिवृच्छब्दे यूपाहवनीयादिषु च शक्त्यवधारणात् । लोकेऽपि चायं व्यवहारो बहुलमुपलभ्यते । तथा सति वैदिकनियोज्यान्वययोग्यतया लिङादीनामपूर्वकार्याभिधायकत्वनिर्णतो नाऽनुपपन्नः ।

अयं चापरो विशेषः यल्लिङादियुक्तानां वाक्यानां कार्यार्थत्वम्, तत्तावद्वृद्धव्यवहारादेवासिद्धम्, किन्तु लिङादिप्रत्ययानां यद्वाच्यं कार्यं तच्चापूर्वरूपमित्येतावन्मात्रं वैदिकपदसम्बन्धादवसीयते इति ॥ ३२ ॥

एकदेशिमतमधुना निराकर्त्तुमुपन्यस्यति—

**व्यवहारत एवाहुर्व्युत्पत्तिमपरे पुनः ।**
**कार्ये मानान्तरावेद्ये क्रियादिव्यतिरेकिणि ॥३३॥**

अस्यार्थः—केचिदेवमाहुः-लिङादिकृतयुवाक्यश्रवणे प्रवृत्तिदर्शनात्, कार्यावगतिनिबन्धनत्वात्प्रवृत्तेः, कार्यमात्रमेव तेषामर्थः, न क्रिया । तस्यां शब्दस्य प्रवृत्त्यनुपयोगित्वादिति क्रियानिष्कृष्टकार्याभिधायिता लौकिकव्यवहारादेव निर्णीयत इति ॥३३॥

तदिदमयुक्तमिति प्रतिजानीते—

**सितेतर इव त्वेष पक्षश्चित्तं न कर्षति ।**
**चन्द्रातपामलच्छायप्रवासमलिनीकृतः ॥३४॥**

कथमित्याह—

**कार्ये मानान्तरावेद्ये पार्श्वस्थस्तन्निबन्धनम् ।**
**व्यवहारं कथंकारं शब्दात्प्रागवबुध्यताम् ॥३५॥**
**व्यवहारमविज्ञाय तन्निबन्धनतद्गता ।**
**प्रतिपत्तिः कथं ज्ञेया शब्दशक्तिः कथन्तराम् ॥३६॥**

इदमत्राकूतम्। यद्यपि कार्यमात्रमेव प्रवृत्त्युपयोगीति तावन्मात्रमेव शब्दार्थः, तथापि तस्य लोके क्रियागतस्यैव प्रवर्त्तकत्वदर्शनात्; शक्यते क्रियाश्रितता प्रत्येतुम्। यथाऽऽकृतिमात्रस्य शब्दार्थत्वेऽपि व्यक्त्याश्रिततापि न प्रतिक्षिप्यते, तथा क्रियाश्रितत्वं प्रमाणान्तरप्रमितं न प्रतिक्षेपमर्हति। तेन क्रियातिरिक्त-कार्याभिधायकत्वमसिद्धम्। यदि पयं तन्निबन्धनव्यवहार एव स्यात्, तदा तद्दर्शनात्तद्धेतुभूतप्रतिपत्त्यन्यथानुपपत्त्याऽनुमानेन शब्दस्य वाचकत्वाध्यवसानं भवेत्। न चैतदस्ति, तस्य शब्दादन्यतः प्रागनवगमात्त-न्निबन्धनव्यवहाराप्रतिपत्तिः, तदप्रतिपत्तौ च तद्धेतुभूतप्रतिपत्त्यननुमानान्न शक्तिकल्पनोपपत्तिः ॥३४-३६॥

तत्राकूतं विवृणोति—

**कार्यप्रतीतिमात्रञ्च प्रवृत्तेरनुमीयताम्।**
**किन्तु कार्या क्रियैवेति लोकदृष्ट्याऽवसीयते ॥३६॥**

लोकप्रतीतं क्रियारूपत्वञ्च न शक्यतेऽपह्नोतुमिति, कार्यमात्रार्थत्वे क्रियैव कार्यतया लिङाद्यर्थ इति निश्चीयते, न पुनः प्रमाणान्तराद-पूर्वमिति ॥३७॥

अन्ये पुनः वेदार्थवोधकाचार्यवचननिबन्धनप्रवृत्तिदर्शनेनातीन्द्रिये कार्ये लिङादयो व्युत्पद्यन्त इत्याहुः। यद्याचार्यवचनादपि क्रियैव कार्यतयाव-गम्यते, तदा तस्याः स्वयं दुःखरूपत्वात्पुरुषार्थान्तरानुबन्धनं विना प्रवृत्त्य-संभवान्नियमेन सुखार्थिनः प्रवृत्तिर्न स्यात्। न च सन्ध्योपासनादौ पुरुषार्थोऽस्ति। तस्मात्क्रियातिरिक्तकार्यमाचार्यवचनेभ्योऽवगम्यते इति।

तान्प्रत्याह—

**वेदार्थाचार्यवाक्येषु प्रवृत्तिर्यापि दृश्यते।**
**तत्राऽप्येषैव सम्बन्धपरिज्ञानविधा भवेत ॥३८॥**

आचार्यवाक्यश्रवणादपि शिष्याणां या सन्ध्योपासनादौ प्रवृत्तिः, तत्रापि वालः स्वविषयनिरूपितं क्रियाकार्यत्वावगममेव कारणत्वेन परिकल्पयेत्, फलं विना च तदनुपपत्तेः फलावगममपि सम्भावयेत्।



लोकव्युत्पत्त्यनुसारेण वेदार्थमपि प्रतिपद्यमानो नित्यनैमित्तिकनिषेधा-धिकारेष्वपि फलं कल्पयेत्। स एव बाल्यदशायां व्युत्पन्नः स्वयमाचार्यपदवी-मधिरूढो वेदार्थं प्रतीत्य शिष्येभ्य उपदिशन् क्रियामेव कार्यतया प्रतिपादयेत्, नाऽपूर्वं कार्यम् इति।

उपसंहरति—

**तस्माल्लोकानुसारेण व्युत्पत्तिः कार्यमात्रके।**
**तस्य त्वपूर्वरूपत्वं वेदवाक्यानुसारतः ॥३९॥**

एवमपूर्वकार्याभिधायित्वे सिद्धे चोदयति—

**ननु लोकविरोधित्वं पक्षेऽस्मिन्नपि दृश्यते।**
**सर्वथैव यतो लोके क्रिया कार्यैव गम्यते ॥४०॥**

परिहरति—

**भवेदेवं विरुध्येते कार्येऽपूर्वेऽपि लौकिके।**
**प्रतिपत्तिप्रयोगौ चेत् क्रियाकार्यत्वगोचरौ ॥४१॥**

यदि कार्याकार्यत्वगोचरौ लौकिकौ प्रतिपत्तिप्रयोगावपूर्वकार्या-भिधायित्वपक्षाङ्गीकारे विरुध्येते, ततो लोकविरुद्धत्वं स्यादस्मत्पक्षस्य। न चैतदस्ति इत्याह—

**अपूर्वं हि क्रिया साध्यं साधिता साधनं क्रिया।**
**तस्मादपूर्वकार्यत्वं क्रियाकार्यत्वसङ्गतम् ॥४२॥**
**प्रमाणान्तरगम्यं हि लोकश्शब्दैर्विवक्षति।**
**क्रियाकार्यत्व एवातः प्रयोगो लक्षणान्वितः ॥४३॥**

प्रतिपत्तिप्रयोगौ हि नावश्यं श्रौतवृत्त्यनुसारिणावेव लक्षणयाऽपि लोके तद्दर्शनात्। तेन यद्यप्युक्तेन न्यायेनापूर्वमेव कार्यं लिङादीनामभिधेयम्, तथापि तस्य क्रियाकार्यत्वाव्यभिचारात्, तत्र लक्षणया तयोर्नानुपपत्तिः। यत्तु श्रौतपदार्थे कार्ये लोके लिङादि न प्रयुज्यते इति, तत्तस्याऽपूर्वात्मनः प्रमाणान्तराप्रतीतत्वात, प्रतीतविषयत्वाच्च लौकिकप्रयोगस्य। क्रिया-

साध्यन्त्वपूर्वम् । साधिता च सती क्रिया साधनं भवतीत्यपूर्वेण सह क्रिया कार्यत्वं नित्यसम्बद्धमिति शक्यते तल्लक्षयितुम् ।।

यद्येषा लक्षणा किमिति तर्हि लोको नावगच्छतीत्याह—

**लक्षणानभिमानस्तु मुख्यार्थानवधारणात् ।**
**ये तु मुख्यार्थकुशलास्तेषां लाक्षणिकत्वधीः ।।४४।।**

मुख्यमर्थमविदित्वा लाक्षणिकमप्यर्थं श्रौतमिव मन्यन्ते, म्लेच्छा इव यववराहाद्यर्थम् । मुख्यार्थविवेकिनान्तु परीक्षमाणां लाक्षणिकत्वधीः । इति ।।४४।।

उपसंहरति—

**तस्मान्मानान्तरावेद्यं कार्यमर्थान्तरान्वितम् ।**
**वेदवाक्यं ब्रवीतीति संक्षेपोऽयमुदाहृतः ।।४५।।**

ग्रन्थस्य, कर्त्तुश्च संज्ञां प्रयोजनञ्चाह—

**वाक्यार्थमातृकेयं प्रभाकरगुरोर्मतानुसारेण ।**
**अनसूयुबोधनार्थं शालिकनाथेन सङ्ग्रथिता ।।४६।।**
**रचिता सच्चरितानामनुग्रहं कर्त्तुकामेन ।**
**वाक्यार्थमातृमायाः वृत्तिरियं शालिकेनैव ।।**

इति महामहोपाध्यायश्रीमच्छालिकनाथमिश्रप्रणीतायां सवृत्तौ वाक्यार्थमातृकायां द्वितीयः परिच्छेदः समाप्तः ।

**समाप्ता च सवृत्तिवाक्यार्थमातृका ।।**



Niyogavākyārthavādins and their theory comes to be known as Niyogavākyārthavāda. In course of our exposition of the text of the *VM*.II, we will have scope to deal with these two theories namely, Bhāvanāvākyārtha of the Bhāṭṭas and Niyogavākyārtha of the Prābhākaras. In the *V* text, 'atra ye pratyastamita. . . .' etc., Śālikanātha refers to the view of the Grammarians according to whom, a vākya is an indivisible unit presenting the meaning as a unit which, for convenience, is further divided into separate meanings of individual words which have a phenomenal existence.[29]

Again with the expression, 'ye ca vākyāntyavarṇa eveti. . . .' etc., in the *V* above, the author of the *VM* refers to the views of Śabaraswāmin and the Naiyāyikas. According to Śabara, the antya varṇa (last letter) along with the impressions of each of the preceding letters brings about the knowledge of the vākyārtha (the meaning of a sentence).[30] Some of the Naiyāyikas also contend that the carama varṇa (last letter) combined with all those words revives (the collective impressions) and thus give rise to the knowledge of the vākyārtha.[31]

In the V text, 'ye ca padairanavitāḥ . . .', Śālikanātha refers to the view of Vārttikakāra Kumārila who contends that the meanings of the Padas (words), not syntactically connected are conveyed by respective Padas and thereafter give rise to the knowledge of the mutual connection, i.e , the Vākyārtha.[32]

The three views referred to above shall come to be criticised by Śālika, in *V* text under *K*(6). So, we shall have the opportunity to discuss these views again in the succeeding pages.

In 'padebhya . . .' etc., of the *K*(1) and *V* above, Śālikanātha has laid stress in establishidg the view of Prabhākara Miśra, according to which the knowledge of the vākyārtha is from the padas (words) only. The inclusion of the emphatic particle 'eva' in *K* and *V* above, indicates that it is only the Padas that give rise to the knowledge of the vākyārtha and thereby the author discards the views held by other thinkers, viz., the view of the vaiyākaraṇas, according to which the knowledge of the vākyārtha is due to the sentence as a whole; the view of the Bhāṣyakāra, i.e., Śabara who contends that the antya varṇa (last letter) along with the impressions of each of the preceeding varṇas brings about the knowledge of the vākyārtha.[33]

Śālikanātha also refutes the view of the Bhāṭṭa Mīmāṁsakas



who assert that the knowledge of vākyārtha or verbal comprehension arises from the padārthas (meanings of the words).[34] While the Bhāṭṭas regard padārthas as the Śābdabodhakāraṇa (cause of the verbal comprehension), the Prābhākaras regard pada as such.[35] In other words, they contend that the vākyārtha is denoted by padas. As we have already stated, we shall discuss these views again in context of our exposition of *V* under *K*(6).

In the *V* text, 'vākyārthapratipattau . . . ātmānaṁ labhhnte' etc., the author of the *VM*, discards totally the view of the vaiyākaraṇas who contend that the vākya denotes tne vākyārtha. But in comparison to the view of the Grammarians, Śālikanātha prefers the view of Śabara and in comparison to this view of Śabara, he prefers the view of Kumārila. But, on the whole, he rejects these aforesaid views and forwards the view of Prabhākara. The emphatic particle 'tu' is used in the *V* in order to eliminate the views of other philosophers. It has also been stated by Śālikanātha that if his view (i.e., the view, according to which, the padas denote related meanings) can be established, then the aforesaid three views do not stand to reason. We have already stated that Śālikanātha discards these views in his *V* text under *K*(6) and as such we do not want to discuss here the refutations of these views by Śālika. We shall discuss the same there in context of the exposition of *V* under *K*(6).

In 'pradhāna . . .' etc., of the *K*, Śālikanātha forwards the view of the Prābhākaras who consider the vākyārtha as constituted by the Padārthas and who understand the two viz., the Padārtha and the Vākyārtha in a relation of Pradhāna (principal) and Gauṇa (secondary). According to the followers of the Prābhākara, the Padas constitute a Vākya and the Padārthas give rise to a Vākyārtha. The Prābhākaras contend that the Vākyārtha is the Pradhāna and the Padārtha is the Gauṇa, because the Vākyārtha is the whole, while the Padārthas are its parts. It is the parts that make the whole. It may be stated here that the phala (result) is the Pradhāna and the means of attaining it is the Gauṇa. For instance, svarga (heaven), the phala is the Pradhāna while its mecns, i.e., the yāga (sacrifice) is the Gauṇa.[36]

The inclusion of the particle 'eva' after the word 'Padārthān' in *K* above, is for laying stress on the view of the Prābhākaras that the Padārthas that have already attained a mutual relation-

ship give rise to the vākyārtha. We have already stated that in the view of the Prābhākaras, the Padas constitute a Vākya and as such the meanings of the Padas constitute the meaning of a Vākya. But mere association of the Padārthas can never give rise to the Vākyārtha but the syntactically related meanings of the Padas give rise to Vākyārtha.[37]

In *K* viz., 'bhūyāṁso . . .' etc., the author proceeds to remove the misgiving expressed earlier that as there are many meanings of the Padas and as such many meanings of Vākyas, the Vākyas will also come to be many. Śālikanātha cotends that though there may be many meanings of the Padas, still there becomes one Vākyārtha only and as the knowledge of the Vākyārtha leads to a single Kārya (performable), the Vākya is also stated to be one necessiated by the unity of purpose of the word-meanings. The Prābhākaras as the advocates of the Anvitābhidhṇnavāda, contend that a Vākya has a unitary meaning of its own, the constituent Padas possess meanings only as they are related to the unitary sentence-meaning. Thus, in the expression, 'gāmānaya' (bring the cow), the word 'gau' (the cow) means not the isolated meaning of 'gotva' (cowness), but 'gau' as related to the act of 'ānayana' (bringing), so also the word 'ānaya' means the act of 'ānayana' as related to the 'gau'. The Padas give their own meanings and their syntactical relation to other Padas in the Vākya so that the Vākyārtha is directly conveyed by the Padas themselves.

It is also indicated in the *K* above, that a group of Padas serving a single purpose, forms one Vākya, but only if any one of these Padas on being disjoined from the rest makes it wanting or defective. Moreover, the *K* texts above, have a reference to 'ekavākyatā' (principle of unitary passage) of the Mīmāṁsakas. We shall have scope to discuss this principle in course of our exposition of the relevant *V* text later on.

In 'pratipattirguṇānāṁ hi . . . etc.' and 'yaddhi pradhāna-bhūtaṁ . . . etc.' in *K*(5B) and *V*(5) respectively above, Śālikanātha states that the knowledge of the principal meaning is the only purpose of the secondary meanings. In reply to an objection as to how that which is the Pradhāna artha (principal meaning) can be known specially, the author of the *VM*, states that it is the Gauṇa artha (secondary meaning) in the intentness of which lies the Gauṇa artha or in other words, the Gauṇa arthas are intent



on bringing about the Pradaāna artha i.e., the Vākyārtha. The Vākyārtha which is the Pradhāna artha is ihe Prameya or the object to be known. It is because of the fact that Śabda as Pramāṇa is admitted only with reference to Tātparya (the intentional meaning). This Vākyārtha cannot be understood by one Pada only. The Vākya itself, is, therefore, is the source of Śābda-bodha, i.e., the Vākyārthajñāna (or the knowledge of the sentence-meaning). This is, as it appears, from the present context, the view of the Grammarians who accept Vākya as the cause of the knowledge of the Vākyārtha.

In the *V* above, we find a quotation viz., Ṣṣṭhādye ca padaṁ nāma . . .' etc., which is stated in the *VM* as being taken from the *BK* of Kumārila. We regret our inability to find out the same as the work viz., the *BK* is not available in print.[38] Moreover, the word'Ṣaṣṭhādye' (i.e., the beginning of the sixth chapter) must refer to the sixth chapter of the *SB*, because the *BK* is a commentary on the *SB*. But the contents in the quotation are not found in the beginning of the sixth chapter of the *SB* (Śābara-bhāṣya) and the quotation, as it appears from the context, is in support of the view of the Grammarians.

In the *K*(6) the author, explains how a Śakti (denotative power) is ascertained and again in *V* under *K*(6), he rejects the view of the Grammarians who contend that a Vākya is the denoter of the Vākyārtha and the view of Śabara and a section of Naiyāyikas who contend that the Antya varṇa is the denoter of the Vākyārtha.

It is stated in the *K* above, that Śakti of the Padas is ascertained through a process of inclusion and exclusion in the usages subsequent to the hearing of sentences by elderly persons. The author here refers to the Vṛddhavyavahāra (usage of elderly person) which is, in the view of the Prābhākaras,[39] thē most important method of learning the words. There are eight methods of learning the words. These are Grammar, Comparison, Dictionary, Statement of trustworthy persons, Usage of the elderly persons, Supplementary statement, Paraphrase and the contiguity of a well-known word.[40] Though the number of methods suggested for acquiring the knowledge of new words varies from school, to school itis interesting to find that Vṛddhavyavahāra (usage of elderly persons) is invariably recognised by almost all the scholars of various schools and as such it deserves to be admitted as the most